## अस्मत्समीपे उपलभ्यानि

**शिक्षणम् -**
अभ्यासपुस्तकम्
विभक्तिवल्लरी
शतृशानजन्तमञ्जरी
कन्नडसंस्कृतकोषः
कन्नड-संस्कृत-क्रियापदकोषः
व्यवहारसाहस्री (कन्नडावृत्तिः)
- " - (हिन्दी - आवृत्तिः)
- " - (इंग्लीष् - आवृत्तिः)
- " - (तेलुगु - आवृत्तिः)
संस्कृत-गुणनकोष्टकम्

**ध्वनिमुद्रिकाः -**
गीतसंस्कृतम्
श्रीकृष्णजननम्
प्रयोगाः (पुस्तकसहिता)
सम्भाषणसंस्कृतम् (पुस्तकसहिता)
शिशुसंस्कृतम्

**अन्यानि -**
रसप्रश्नाः
नवरूपकम् (कन्नडलिपिः)
साक्षिशिला (जानपदरूपकम्)
सुभाषितरसः (कन्नडलिपिः)
संस्कारसुधा (कन्नडलिपिः)
गीतसंस्कृतम् (गीतसङ्ग्रहः)
पञ्चतन्त्रकथाः
बालकथामाला
जागरूको भव (वीथीनाटकम्)
शुभाशयपत्राणि, विविधसंश्लेषकाणि, भित्तिपत्राणि इत्यादीनि अपि ।

# प्रयोगाः

## संस्कृताभ्यासार्थं प्रकाशिता ध्वनिमुद्रिका

पाठयोजना -
विश्वासः

पल्लवप्रकाशनम्
बेङ्गलूरु

पल्लवप्रकाशनम्
'अक्षरम्' ८ उपमार्गः
२ घट्टः, गिरिनगरम्
बेङ्गलूरु - ५६० ०८५

प्रथममुद्रणम्, १९९३, ५,०००



ध्वनिमुद्रिका-पुस्तकयोः
**मूल्यं - रू. ४०-००**

मुद्रणम् -
स्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

**PRAYOGĀḤ** - The text of an Audio cassettee connected with Active, Passive and Imparsonal Voices.

Publisher - **PALLAVA PRAKASHANAM**, 'Aksharam', 8th Cross, II Phase Girinagar, Bangalore - 560 085

Pages : iv + 36 Price Rs. 40.00 (Along with cassettee)

First Print : September 1993

Printed at : **SPAN PRINT**, Basavanagudi, Bangalore - 4 Phone : 628880

# प्रस्तावना

सम्भाषणस्य मूलं वाक्यमेव। अतः शुद्धसम्भाषणे वाक्यप्रयोगज्ञानम् अत्यन्तम् आवश्यकम् । तदर्थं कर्तरि-कर्मणि-भावे-प्रयोगेषु कौशलप्राप्तिः संस्कृतसम्भाषणाभ्यासिनां नितराम् आवश्यकी ।

एतेषां प्रयोगाणां पाठनार्थम्, अभ्यासार्थं च हिन्दु सेवा प्रतिष्ठानेन बहवः प्रयत्नाः कृताः, क्रियमाणाः च सन्ति। तेषुः अन्यतमः प्रयत्नः एतत् पुस्तकम्। एतस्य पुस्तकस्य ध्वनिमुद्रिकायाश्च साहाय्येन प्रयोगाणां विषये अभ्यासः कर्तुं शक्यते । अत्र पठनाभ्यासः श्रवणाभ्यासश्च युगपत् भवति इति कारणतः एषः अभ्यासः द्विगुणितं लाभं जनयतीति वयं विश्वसिमः।

कालकाराय लिङ्गदेवरुवर्याय मुद्रणकार्ये सहकृतवद्भ्यः स्यान्मुद्रणालयबन्धुभ्यः च वयं कृतज्ञतां समर्पयामः ।

श्रीमुख सं॥ निजभाद्रपदशुक्लदशमी **- विश्वासः**
२५.९.१९९३

# अनुक्रमणिका



क्रियापदस्य मूलं धातुः । यथा – 'वदति' इति क्रियापदस्य मूलं 'वद' इति धातुः । एवमेव 'लिखति' इत्यस्य मूलं 'लिख' इति धातुः । सर्वाणि अपि क्रियापदानि धातुतः एव निष्पन्नानि ।

धातुषु केचन सकर्मकाः, केचन अकर्मकाः, अन्ये केचन द्विकर्मकाः । यथा –

वद, पठ, भक्ष, पा – इत्यादयः सकर्मकाः धातवः ।

भू, हस, रुद, स्था – इत्यादयः अकर्मकाः धातवः ।

प्रच्छ, याच, दुह – इत्यादयः द्विकर्मकाः धातवः ।

प्रयोगः त्रिधा – कर्तरिप्रयोगः, कर्मणिप्रयोगः, भावेप्रयोगश्च इति । एते एव कर्तृवाच्यं, कर्मवाच्यं, भाववाच्यम् इत्यपि उच्यन्ते । कर्तरिप्रयोगः सर्वेषामपि धातूनां सम्भवति ।

सकर्मकधातोः कर्तरिप्रयोगः यथा – *बालः अभ्यासं करोति ।*

अकर्मकधातोः कर्तरिप्रयोगः यथा – *बालिका हसति ।*

द्विकर्मकधातोः कर्तरिप्रयोगः यथा – *गुरुः शिष्यं प्रश्नं पृच्छति ।*

एवं सर्वेषामपि धातूनां कर्तरिप्रयोगः भवत्येव । कर्मणिप्रयोगस्तु सकर्मकधातूनामेव, न तु अकर्मकधातूनाम् । भावेप्रयोगः अकर्मकधातूनामेव, न तु सकर्मकधातूनाम् ।

एतदेव एवमपि वक्तुं शक्यते –

सकर्मकधातूनां प्रयोगः द्विधा – १. कर्तरिप्रयोगः<br>२. कर्मणिप्रयोगश्च इति ।

अकर्मकधातूनां प्रयोगः द्विधा – १. कर्तरिप्रयोगः
२. भावेप्रयोगश्च इति।

द्विकर्मकधातूनां प्रयोगः अपि द्विधा –१. कर्तरिप्रयोगः
२. कर्मणिप्रयोगश्च इति।

एवं च सर्वेषां धातूनां कर्तरिप्रयोगः भवत्येव। कर्मणिप्रयोगस्तु सकर्मकाणामेव, भावेप्रयोगस्तु अकर्मकाणामेव इति।

एतेषां कर्तरि – कर्मणि – भावेप्रयोगाणां विषये वयं कांश्चित् अंशान् ज्ञातुं प्रयत्नं कुर्मः।

**अ. आदौ कर्तरिप्रयोगः**

एतानि वाक्यानि सावधानं परिशीलयन्तु –

१. कृष्णः ग्रन्थं पठति। २. छात्राः पाठं पठन्ति।
३. लता स्यूतं गृह्णाति। ४. बालिकाः अभ्यासं कुर्वन्ति।

एतानि सर्वाणि वाक्यानि कर्तरिप्रयोगस्य उदाहरणानि। एतेषु वाक्येषु क्रियापदं कर्तृपदानुगुणं भवति। यथा –

कृष्णः पठति। छात्राः पठन्ति।
लता गृह्णाति। बालिकाः कुर्वन्ति।

इत्युक्ते कर्तृपदम् एकवचनान्तं चेत् क्रियापदमपि एकवचनान्तं भवति, कर्तृपदं बहुवचनान्तं चेत् क्रियापदमपि बहुवचनान्तं भवति।



एतस्मिन् प्रयोगे कर्मपदस्य वचनं क्रियापदस्य वचनेन सह अन्वितं न भवति। यथा –

*कृष्णः पाठान् पठति।*

अत्र 'पाठान्' इति कर्मपदं बहुवचनान्तम्। तथापि क्रियापदम् एकवचनान्तमेव अस्ति, यतः 'कृष्णः' इति कर्तृपदम् एकवचनान्तम्।

*बालाः पाठं पठन्ति।*

अत्र 'पाठम्' इति कर्मपदम् एकवचनान्तम्। तथापि क्रियापदं बहुवचनान्तम् अस्ति, यतः 'बालाः' इति कर्तृपदं बहुवचनान्तम्।

कर्तरिप्रयोगस्य नियमान् वयम् एवं सङ्ग्रहीतुं शक्नुमः –

१. कर्तरिप्रयोगे क्रियापदं कर्तृपदानुगुणं भवति।
२. कर्तरिप्रयोगे कर्तृपदं प्रथमाविभक्त्यन्तं भवति।
३. कर्तरिप्रयोगे कर्मपदं द्वितीयाविभक्त्यन्तं भवति।

एतानि वाक्यानि अनुसृत्य वदन्तु। एकैकं वाक्यम् अपि द्विवारम् उच्चार्यते। यदा द्वितीयवारम् उच्चार्यते तदा भवन्तः वदन्तु।

१. जगदीशः कार्यालयं गच्छति।

** [--------------------------------------------]

** एतस्मिन् पुस्तके रिक्तं स्थलं यत्र सूच्यते तत्र भवद्भिः वाक्यानि वक्तव्यानि। एवम् एव अग्रे अपि ज्ञातव्यम्।

२. शिक्षकाः पाठान् पाठयन्ति ।

[--------------------------------------------]

३. स्मिता विषयान् वदति ।

[--------------------------------------------]

४. उपन्यासिकाः पत्रिकाः पठन्ति ।

[--------------------------------------------]

५. वाहनं नगरं गच्छति ।

[--------------------------------------------]

६. मित्रं फलानि खादति ।

[--------------------------------------------]

७. एषा लेखनीम् आनयति ।

[--------------------------------------------]

८. सा घटीः क्रीणाति ।

[--------------------------------------------]

९. गिरिजा वार्तां शृणोति ।

[--------------------------------------------]

१०. लता चलनचित्राणि पश्यति ।

[--------------------------------------------]



इदानीम् 'उक्ताः त्रयः अपि नियमाः एतेषु वाक्येषु कथम् अन्विताः भवन्ति' इति परिशीलयन्तु ।

**आ. इदानीं कर्मणिप्रयोगः ।**

एतानि वाक्यानि सावधानं परिशीलयन्तु -

१. गोपालेन इतिहासः पठ्यते ।
२. लेखकेन निबन्धाः लिख्यन्ते ।
३. अनुजया निद्रा क्रियते ।
४. महिलया शाटिकाः नीयन्ते ।
५. मुकुन्देन चित्रं दृश्यते ।
६. केशवेन गीतानि श्रूयन्ते ।

एतानि सर्वाणि वाक्यानि कर्मणिप्रयोगस्य उदाहरणानि । एतेषु वाक्येषु क्रियापदं कर्मपदानुगुणं भवति । यथा -

इतिहासः पठ्यते । निबन्धाः लिख्यन्ते ।
निद्रा क्रियते । शाटिकाः नीयन्ते ।
चित्रं दृश्यते । गीतानि श्रूयन्ते ।

इत्युक्ते अत्र कर्मपदम् एकवचनान्तं चेत् क्रियापदमपि एकवचनान्तं भवति । कर्मपदं बहुवचनान्तं चेत् क्रियापदमपि बहुवचनान्तं भवति ।

कर्मणिप्रयोगे कर्तृपदस्य वचनं क्रियापदस्य वचनेन सह अन्वितं न भवति । यथा -

*मित्रेण कार्याणि क्रियन्ते ।*

अत्र 'मित्रेण' इति कर्तृपदम् एकवचनान्तम् । तथापि क्रियापदं बहुवचनान्तमेव अस्ति, यतः 'कार्याणि' इति कर्मपदं बहुवचनान्तम् ।

*मित्रैः भोजनं क्रियते ।*

अत्र 'मित्रैः' इति कर्तृपदं बहुवचनान्तम् । तथापि क्रियापदं एकवचनान्तमेव अस्ति, यतः 'भोजनम्' इति कर्मपदम् एकवचनान्तम् ।

कर्मणिप्रयोगस्य नियमान् वयम् एवं सङ्ग्रहीतुं शक्नुमः –

१. कर्मणिप्रयोगे क्रियापदं कर्मपदानुगुणं भवति ।
२. कर्मणिप्रयोगे कर्तृपदं तृतीयाविभक्त्यन्तं भवति ।
३. कर्मणिप्रयोगे कर्मपदं प्रथमाविभक्त्यन्तं भवति ।

एतान् अंशान् मनसि स्थापयित्वा एतानि वाक्यानि शृण्वन्तु । अनन्तरम् अनुसृत्य वदन्तु ।

१. गोविन्देन देवः नम्यते ।

* [------------------------------------------------]

२. नलिन्या श्लोकाः उच्यन्ते ।

[------------------------------------------------]

३. गङ्गाधरेण कन्नडभाषा ज्ञायते ।

[------------------------------------------------]

* अत्र भवद्भिः वाक्यानि वक्तव्यानि ।



४. मालाकारेण मालाः दीयन्ते ।

[------------------------------------------------]

५. अपर्णया पुस्तकं पठ्यते ।

[------------------------------------------------]

६. एताभिः पुष्पाणि ध्रियन्ते ।

[------------------------------------------------]

७. जनकेन पुत्री रक्ष्यते ।

[------------------------------------------------]

८. शिक्षकेण विद्यार्थिन्यः निन्द्यन्ते ।

[------------------------------------------------]

९. भवता सम्भाषणं क्रियते ।

[------------------------------------------------]

१०. भवत्या वस्त्राणि प्रक्षाल्यन्ते ।

[------------------------------------------------]

एतेषु वाक्येषु पूर्वम् उक्ताः कर्मणिप्रयोगस्य त्रयः अपि नियमाः कथम् अन्विताः भवन्ति इति भवन्तः लक्षितवन्तः स्युः ।

### ३. इतःपरं भावेप्रयोगः

एतानि वाक्यानि सावधानं परिशीलयन्तु ।

१. शङ्करेण हस्यते ।
२. शिशुभिः रुद्यते ।
३. भरतेन उत्थीयते ।
४. सर्वैः उपविश्यते ।
५. पुष्पैः विकस्यते ।
६. सस्यैः कम्प्यते ।

एतानि सर्वाणि अपि वाक्यानि भावेप्रयोगस्य उदाहरणानि । भावेप्रयोगस्य केचन विशिष्टाः अंशाः –

१. भावेप्रयोगे क्रियापदं सर्वदा प्रथमपुरुष-एकवचनान्तमेव भवति । यथा – हस्यते, उपविश्यते । (हस्येते, हस्यन्ते – इत्यादीनां रूपाणां प्रयोगः कदापि न सम्भवति । उत्तमपुरुषस्य, मध्यमपुरुषस्य च एकवचनप्रयोगः अपि न सम्भवति ।)

२. भावेप्रयोगे कर्मपदं न भवति ।

३. भावेप्रयोगे कर्तृपदं तृतीयाविभक्त्यन्तं भवति ।

भावेप्रयोगस्य एतानि उदाहरणानि शृण्वन्तु, अनन्तरम् अनुसृत्य वदन्तु –



१. फलैः पत्यते ।

[-----------------------------------------------]

२. कार्यक्रमेण भूयते ।

[-----------------------------------------------]

३. पक्षिभिः डीयते ।

[-----------------------------------------------]

४. शुनकेन भष्यते ।

[-----------------------------------------------]

५. सिंहेन गर्ज्यते ।

[-----------------------------------------------]

६. मित्रैः स्थीयते ।

[-----------------------------------------------]

७. नर्तक्या नृत्यते ।

[-----------------------------------------------]

### अभ्यासः

कर्तरि, कर्मणि, भावे च प्रयोगान् वयं ज्ञातवन्तः । इदानीं तद्विषये अभ्यासं कुर्मः ।

**I. अत्र एका कथा अस्ति । एतां कथां शृण्वन्तु –**

१. एकः भिक्षुकः अस्ति ।

२. सः भिक्षाटनं कृत्वा जीवननिर्वहणं करोति।

३. जनाः तस्मै भिक्षां ददति।

४. सः जीर्णानां कागदानां सङ्ग्रहणं करोति।

५. तेषां विक्रयणेन अपि धनं सम्पादयति।

६. एकदा सायङ्काले सः गृहम् आगच्छति।

७. सङ्गृहीतानि कागदानि सः पृथक्करोति।

८. तत्र एकां कागदपुटिकां सः पश्यति।

९. तत्र शतरूप्यकाणि सन्ति !

१०. सः भिक्षुकः चिन्तयति।

११. अनन्तरं सः आरक्षककार्यालयं गच्छति।

१२. आरक्षकाय धनं ददाति, विषयं निवेदयति च।

१३. आरक्षकस्य अतीव सन्तोषः भवति।

१४. सः भिक्षुकं प्रशंसति।

एतस्यां कथायां विद्यमानानि एतानि वाक्यानि इदानीं क्रमशः पुनः उक्तानि सन्ति। एकैकं वाक्यं शृण्वन्तु, प्रयोगपरिवर्तनं च कुर्वन्तु। भवतां सौकर्याय शुद्धं वाक्यम् अपि अनन्तरम् अस्माभिः उक्तमस्ति।

१. एकः भिक्षुकः अस्ति।

[--------------- --------------- --------------- ।]

*(एकेन भिक्षुकेण भूयते।)*



२. सः भिक्षाटनं कृत्वा जीवननिर्वहणं करोति।

[--------- --------- --------- --------- --------- ।]

*(तेन भिक्षाटनं कृत्वा जीवननिर्वहणं क्रियते।)*

३. जनाः तस्मै भिक्षां ददति।

[----------- ----------- ----------- ----------- ।]

*(जनैः तस्मै भिक्षा दीयते।)*

४. सः जीर्णानां कागदानां सङ्ग्रहणं करोति।

[--------- -------- --------- -------- --------- ।]

*(तेन जीर्णानां कागदानां सङ्ग्रहणं क्रियते।)*

५. तेषां विक्रयणेन अपि धनं सम्पादयति।

[--------- -------- --------- -------- --------- ।]

*(तेषां विक्रयणेन अपि धनं सम्पाद्यते।)*

६. एकदा सायङ्काले सः गृहम् आगच्छति।

[--------- --------- --------- --------- -------- ।]

*(एकदा सायङ्काले तेन गृहम् आगम्यते।)*

७. सङ्गृहीतानि कागदानि सः पृथक्करोयति।

[----------- ----------- ----------- ----------- ।]

*(सङ्गृहीतानि कागदानि तेन पृथक्क्रियन्ते।)*

८. तत्र एकां कागदपुटिकां सः पश्यति।

[-------- --------- --------- --------- --------- ।]

*(तत्र एका कागदपुटिका तेन दृश्यते।)*

९. तत्र शतरूप्यकाणि सन्ति।

[-------------- -------------- -------------- ।]

*(तत्र शतरूप्यकैः भूयते।)*

१०. सः भिक्षुकः चिन्तयति।

[-------------- -------------- -------------- ।]

*(तेन भिक्षुकेण चिन्त्यते।)*

११. अनन्तरं सः आरक्षककार्यालयं गच्छति।

[----------- ----------- ----------- ----------- ।]

*(अनन्तरं तेन आरक्षककार्यालयः गम्यते।)*

१२. आरक्षकाय धनं ददाति, विषयं निवेदयति च।

[-------- ------ -------- -------- -------- ----- ।]

*(आरक्षकाय धनं दीयते, विषयः निवेद्यते च।)*

१३. आरक्षकस्य अतीव सन्तोषः भवति।

[----------- ----------- ----------- ----------- ।]

*(आरक्षकस्य अतीव सन्तोषेण भूयते।)*



१४. सः भिक्षुकं प्रशंसति।

[-------------- -------------- -------------- ।]

*(तेन भिक्षुकः प्रशस्यते।)*

**II. कर्मणिप्रयोगेण भावेप्रयोगेण च एतां कथां शृण्वन्तु।**

१. एकेन रजकेन भूयते।
२. तेन एकः गर्दभः पाल्यते।
३. तेन गर्दभाय अधिकः आहारः न दीयते।
४. अतः गर्दभेन तस्मै कुप्यते।
५. एकदा गर्दभस्य बुभुक्षया भूयते।
६. तदा तेन दूरं गम्यते।
७. तत्र क्षेत्राणि दृष्ट्वा तेन तुष्यते।
८. गर्दभेन एवं चिन्त्यते –
९. "यदि मया सिंहस्य चर्म ध्रियते तर्हि मां दृष्ट्वा सर्वैः धाव्यते।
१०. एकेन अपि मां ताडयितुं समीपं न आगम्यते" इति।
११. एवं चिन्तयित्वा गर्दभेन एकं सिंहचर्म आनीयते।
१२. तेन तत् ध्रियते।
१३. प्रतिदिनं तेन सानन्दं सस्यानि खाद्यन्ते।
१४. कृषकैः भीत्या गर्दभस्य छाया अपि न स्पृश्यते।
१५. एकदा तत् क्षेत्रं प्रति एकया गर्दभ्या आगम्यते।

१६. तां दृष्ट्वा गर्दभेन आनन्देन रट्यते।

१७. तदा 'एषः मिथ्यासिंहः' इति जनैः ज्ञायते।

१८. तैः आगत्य गर्दभः दण्डैः ताड्यते।

१९. गर्दभेन मृतेन भूयते।

एतस्यां कथायां विद्यमानानि एतानि वाक्यानि इदानीं क्रमशः पुनः उक्तानि सन्ति। एकैकं वाक्यं शृण्वन्तु। प्रयोगपरिवर्तनं च कुर्वन्तु। अनन्तरं पुनः उक्तानि शुद्धानि वाक्यानि अपि शृण्वन्तु।

१. एकेन रजकेन भूयते।

[-------------- -------------- -------------- ।]

*(एकः रजकः अस्ति।)*

२. तेन एकः गर्दभः पाल्यते।

[---------- ---------- ---------- ---------- ।]

*(सः एकं गर्दभं पालयति।)*

३. तेन गर्दभाय अधिकः आहारः न दीयते।

[----- -------- -------- -------- ------ -------- ।]

*(सः गर्दभाय अधिकम् आहारं न ददाति।)*

४. अतः गर्दभेन तस्मै कुप्यते।

[---------- ---------- ---------- ---------- ।]

*(अतः गर्दभः तस्मै कुप्यति।)*



५. एकदा गर्दभस्य बुभुक्षया भूयते।

[---------- ---------- ---------- ---------- ।]

*(एकदा गर्दभस्य बुभुक्षा भवति।)*

६. तदा तेन दूरं गम्यते।

[---------- ---------- ---------- -------- ।]

*(तदा सः दूरं गच्छति।)*

७. तत्र क्षेत्राणि दृष्ट्वा तेन तुष्यते।

[---------- ---------- ---------- ---------- ।]

*(तत्र क्षेत्राणि दृष्ट्वा सः तुष्यति।)*

८. गर्दभेन एवं चिन्त्यते -

[-------------- -------------- -------------- ।]

*(गर्दभः एवं चिन्तयति -)*

९. "यदि मया सिंहस्य चर्म ध्रियते तर्हि मां दृष्ट्वा सर्वैः धाव्यते।

["-------- -------- -------- -------- --------
--------- ।]

*("यदि अहं सिंहस्य चर्म धरामि तर्हि मां दृष्ट्वा सर्वे धावन्ति।)*

१०. एकेन अपि मां ताडयितुं समीपं न आगम्यते" इति।

[-------- -------- ------ -------- ------ ---------
--------" -------- ।]

*(एकः अपि मां ताडयितुं समीपं न आगच्छाति" इति ।)*

११. एवं चिन्तयित्वा गर्दभेन एकं सिंहचर्म आनीयते ।

[------ -------- -------- ------ -------- -------- ।]

*(एवं चिन्तयित्वा गर्दभः एकं सिंहचर्म आनयति ।)*

१२. तेन तत् ध्रियते ।

[---------------- --------------- ------------- ।]

*(सः तत् धरति ।)*

१३. प्रतिदिनं तेन सानन्दं सस्यानि खाद्यन्ते ।

[---------- -------- --------- --------- -------- ।]

*(प्रतिदिनं सः सानन्दं सस्यानि खादति ।)*

१४. कृषकैः भीत्या गर्दभस्य छाया अपि न स्पृश्यते ।

[-------- -------- -------- -------- -------- ------
-------- ।]

*(कृषकाः भीत्या गर्दभस्य छायाम् अपि न स्पृशन्ति ।)*

१५. एकदा तत् क्षेत्रं प्रति एकया गर्दभ्या आगम्यते ।

[-------- ------- -------- -------- -------- -------
-------- ।]

*(एकदा तत् क्षेत्रं प्रति एका गर्दभी आगच्छति ।)*



१६. तां दृष्ट्वा गर्दभेन आनन्देन रट्यते ।

[-------- -------- ---------- --------- --------- ।]

*(तां दृष्ट्वा गर्दभः आनन्देन रटति ।)*

१७. तदा 'एषः मिथ्यासिंहः' इति जनैः ज्ञायते ।

[------ '------ --------' ------ -------- -------- ।]

*(तदा 'एषः मिथ्यासिंहः' इति जनाः जानन्ति ।)*

१८. तैः आगत्य गर्दभः दण्डैः ताड्यते ।

[-------- --------- --------- --------- -------- ।]

*(ते आगत्य गर्दभं दण्डैः ताडयन्ति ।)*

१९. गर्दभेन मृतेन भूयते ।

[-------------- -------------- -------------- ।]

*(गर्दभः मृतः भवति ।)*

**सूचना -** प्रयोगपरिवर्तनं यदा कुर्मः तदा एते अंशाः अस्माभिः स्मर्तव्याः ।

अ. **प्रयोगपरिवर्तनसन्दर्भे कर्तृपदस्य, कर्मपदस्य, क्रियापदस्य च रूपेषु परिवर्तनं भवति** । परन्तु वाक्ये स्थितानां अन्येषां शब्दानां परिवर्तनं न भवति ।

यथा - वेङ्कटेशः प्रतिदिनं सायङ्काले गृहे पाठं पठति ।

एतस्य कर्मणिप्रयोगः यथा -

वेङ्कटेशेन प्रतिदिनं सायङ्काले गृहे पाठः पठ्यते।

अत्र प्रतिदिनं, सायङ्काले, गृहे - इत्येतेषां रूपाणां परिवर्तनं न अभवत्। तानि रूपाणि कर्तरिप्रयोगे कर्मणिप्रयोगे च समानानि एव।

एतम् अंशं मनसि स्थापयित्वा एतेषां वाक्यानां प्रयोगपरिवर्तनं कुर्वन्तु। अनन्तरम् अस्माभिः प्रयोगपरिवर्तनं कृत्वा उक्तं वाक्यमपि शृण्वन्तु।

१. लता सायङ्काले सख्या सह सङ्गीतकक्ष्यां गच्छति।

[----- -------- -------- ------- -------- -------- ।]

*(लतया सायङ्काले सख्या सह सङ्गीतकक्ष्या गम्यते।)*

२. वैद्यः परीक्षां कृत्वा अस्वस्थाय औषधं ददाति।

[------ -------- ------ -------- -------- -------- ।]

*(वैद्येन परीक्षां कृत्वा अस्वस्थाय औषधं दीयते।)*

३. अहं मासे एकवारं चित्रमन्दिरं गत्वा चित्रं पश्यामि।

[----- -------- -------- -------- ------- -------- ।]

*(मया मासे एकवारं चित्रमन्दिरं गत्वा चित्रं दृश्यते।)*

४. गजाननः मित्रैः सह क्रीडितुं क्रीडाङ्गणं गच्छति।

[-------- ------ ------ -------- -------- -------- ।]

*(गजाननेन मित्रैः सह क्रीडितुं क्रीडाङ्गणं गम्यते।)*



५. पत्रवितारकाः गृहं गृहं गत्वा पत्राणि वितरन्ति।

[-------- ------ ------ -------- -------- -------- ।]

*(पत्रवितारकैः गृहं गृहं गत्वा पत्राणि वितीर्यन्ते।)*

६. अहं ग्रीष्मविरामकाले प्रवासार्थं कन्याकुमारीं गच्छामि।

[-------- ------------ -------- -------- -------- -------- ।]

*(मया ग्रीष्मविरामकाले प्रवासार्थं कन्याकुमारी गम्यते।)*

७. अम्बा शाकानि क्रेतुं स्यूतं स्वीकृत्य विपणिं गच्छति।

[------ -------- -------- -------- -------- -------- -------- ।]

*(अम्बया शाकानि क्रेतुं स्यूतं स्वीकृत्य विपणिः गम्यते।)*

८. अहम् आकाशवाणीवार्तां श्रुत्वा निद्रां करोमि।

[-------- ----------- -------- -------- -------- ।]

*(मया आकाशवाणीवार्ता श्रुत्वा निद्रा क्रियते।)*

९. गीता प्रतिदिनं विद्यालये सखीः पश्यति।

[-------- --------- --------- -------- ---------- ।]

*(गीतया प्रतिदिनं विद्यालये सख्यः दृश्यन्ते।)*

१०. कुमारः अग्रजेन सह कलहं करोति ।

[-------- -------- -------- -------- -------- ।]

*(कुमारेण अग्रजेन सह कलहः क्रियते ।)*

आ. प्रयोगपरिवर्तनसन्दर्भे कर्तृपदस्य कर्मपदस्य वा विशेषणानि सन्ति चेत् तेषां रूपाणामपि परिवर्तनं भवति ।

यथा - समर्थः लेखकः उत्तमां कथां लिखति ।

एतस्य कर्मणिप्रयोगः यथा -

समर्थेन लेखकेन उत्तमा कथा लिख्यते ।

एवमेव - सुन्दरी गिरिजा समीचीनम् अभिनयं करोति ।
सुन्दर्या गिरिजया समीचीनः अभिनयः क्रियते ।

अत्र विशेषणानामपि परिवर्तनं जातम् अस्ति ।

एतम् अंशं मनसि स्थापयित्वा एतेषां वाक्यानां प्रयोगपरिवर्तनं कुर्वन्तु । अनन्तरम् अस्माभिः प्रयोगपरिवर्तनं कृत्वा उक्तं वाक्यमपि शृण्वन्तु ।

१. कुशलः गायकः उत्तमं गीतं गायति ।

[-------- -------- -------- -------- -------- ।]

*(कुशलेन गायकेन उत्तमं गीतं गीयते ।)*

२. दृढकायाः कर्मकराः कठिनं कार्यं कुर्वन्ति ।

[-------- -------- -------- -------- -------- ।]



*(दृढकायैः कर्मकरैः कठिनं कार्यं क्रियते ।)*

३. वीराः सैनिकाः दुष्टान् शत्रून् मारयन्ति ।

[-------- -------- -------- -------- --------

*(वीरैः सैनिकैः दुष्टाः शत्रवः मार्यन्ते ।)*

४. पानमत्ताः दुष्टाः सर्वान् जनान् निन्दन्ति ।

[-------- -------- -------- -------- --------

*(पानमत्तैः दुष्टैः सर्वे जनाः निन्द्यन्ते ।)*

५. अलसाः छात्राः पठितान् विषयान् न स्मरन्ति ।

[-------- -------- -------- -------- -------- --------

*(अलसैः छात्रैः पठिताः विषयाः न स्मर्यन्ते ।*

६. बुद्धिमती उमा आत्मीयाः सखीः सत्करोति ।

[-------- -------- -------- -------- --------

*(बुद्धिमत्या उमया आत्मीयाः सख्यः सत्क्रिय*

७. चतुराः आरक्षकाः दुष्टं चोरं गृह्णन्ति ।

[-------- -------- -------- -------- --------

*(चतुरैः आरक्षकैः दुष्टः चोरः गृह्यते ।)*

८. उदात्ताः पुरुषाः क्षुद्रान् विषयान् न चिन्तयन्ति

[-------- -------- -------- -------- --- --------

*(उदात्तैः पुरुषैः क्षुद्राः विषयाः न चिन्त्यन्ते ।*

९. **चपलः वानरः** मधुराणि फलानि खादति ।

[-------- -------- --------- --------- -------- ।]

*(चपलेन वानरेण मधुराणि फलानि खाद्यन्ते ।)*

१०. कृपणाः जनाः किञ्चित् धनमपि न ददति ।

[-------- -------- -------- -------- --- -------- ।]

*(कृपणैः जनैः किञ्चित् धनमपि न दीयते ।)*

## प्रयोगः (भूतकाले)

एतावत्पर्यन्तं प्रयोगाणां विषये यः अभ्यासः कृतः तत्र सर्वत्र क्रियापदानि वर्तमानकाले एव आसन् । इत्युक्ते वर्तमानकाले कथं प्रयोगपरिवर्तनं करणीयम् इति वयं ज्ञातवन्तः । भूतकाले कथं प्रयोगपरिवर्तनं करणीयम् इति इदानीं जनीमः ।

एतानि वाक्यानि सावधानं परिशीलयन्तु –

| | |
|---|---|
| १. शिवः श्लोकम् अपठत् । | शिवेन श्लोकः अपठ्यत । |
| २. गङ्गा चित्रम् अलिखत् । | गङ्गया चित्रम् अलिख्यत । |
| ३. अरविन्दः आपणम् अगच्छत् । | अरविन्देन आपणः अगम्यत । |
| ४. बालिकाः अहसन् । | बालिकाभिः अहस्यत । |
| ५. फलानि अपतन् । | फलैः अपत्यत । |
| ६. शुनकाः अभषन् । | शुनकैः अभष्यत । |



एतेषु वाक्येषु अपठ्यत, अलिख्यत, अगम्यत – इति क्रियापदस्य कर्मणिरूपाणि; अहस्यत, अपत्यत, अभष्यत – इति भावेरूपाणि च प्रयुक्तानि सन्ति ।

एषः एकः प्रकारः । परन्तु वयं सरलसंस्कृते भूतकालार्थे तिङन्तानां स्थाने कृदन्तानां प्रयोगं कुर्मः । कृदन्तानां प्रयोगः कर्तरिप्रयोगे, कर्मणिप्रयोगे, भावेप्रयोगे च सम्भवति ।

१. सुनीलः सङ्गीतं श्रुतवान् ।
अत्र कर्तरिप्रयोगे 'श्रुतवान्' इति कृदन्तरूपम् ।

२. विजयेन फेनकम् आनीतम् ।
अत्र कर्मणिप्रयोगे 'आनीतम्' इति कृदन्तरूपम् ।

३. पुष्पैः विकसितम् ।
अत्र भावेप्रयोगे 'विकसितम्' इति कृदन्तरूपम् ।

भूतकाले कर्तरिप्रयोगतः कर्मणिप्रयोगं प्रति परिवर्तनाभ्यासः–

| | |
|---|---|
| १. रामः गतवान् । | रामेण गतम् । |
| २. ललिता उक्तवती । | ललितया उक्तम् । |
| ३. लीला दत्तवती । | लीलया दत्तम् । |
| ४. विश्वनाथः कृतवान् । | विश्वनाथेन कृतम् । |
| ५. चित्रकाराः लिखितवन्तः । | चित्रकारैः लिखितम् । |
| ६. भगिन्यः स्मृतवत्यः । | भगिनीभिः स्मृतम् । |
| ७. छात्राः श्रुतवन्तः । | छात्रैः श्रुतम् । |
| ८. एते ज्ञातवन्तः । | एतैः ज्ञातम् । |

९. एताः दृष्टवत्यः।    एताभिः दृष्टम्।
१०. वयं नीतवन्तः।    अस्माभिः नीतम्।

एतेषु सर्वेषु वाक्येषु कृदन्तानाम् एव प्रयोगः कृतः अस्ति। कर्तरिप्रयोगे क्तवतु-प्रत्ययान्तानि रूपाणि, कर्मणिप्रयोगे क्त-प्रत्ययान्तानि रूपाणि च प्रयुक्तानि सन्ति।

अत्रापि प्रयोगपरिवर्तनसन्दर्भे पूर्वम् उक्ताः नियमाः एव अन्विताः भवन्ति। किन्तु अत्र कश्चन विशेषः अस्ति। इदानीं 'रामः गतवान्।' 'रामेण गतम्।' - इत्यादीनि यानि वाक्यानि उक्तानि, तत्र सर्वत्र कर्मपदं न आसीत्। यदि कर्मपदं भवति तर्हि किञ्चित् वैलक्षण्यं भवति। यथा -

रामः नगरं गतवान्। रामेण नगरं गतम्।
रामः विद्यालयं गतवान्। रामेण विद्यालयः गतः।
रामः काशीं गतवान्। रामेण काशी गता।

अत्र कर्मणिप्रयोगे कृदन्तरूपं कर्मपदस्य लिङ्गम् अनुसरति इति भवन्तः लक्षितवन्तः स्युः। कारणं तु - अत्र यत् कृदन्तरूपं प्रयुक्तम् अस्ति तत्तु कर्मपदस्य विशेषणम् अस्ति। अतः विशेष्यस्य लिङ्गानुसारं विशेषणस्य कृदन्तरूपस्य लिङ्गं परिवर्तते।

अन्यानि उदाहरणानि -

१. लीला पुस्तकं दत्तवती।    लीलया पुस्तकं दत्तम्।
लीला स्यूतं दत्तवती।    लीलया स्यूतः दत्तः।
लीला लेखनीं दत्तवती।    लीलया लेखनी दत्ता।



२. एषः कार्यं कृतवान्।    एतेन कार्यं कृतम्।
एषः अभ्यासं कृतवान्।    एतेन अभ्यासः कृतः।
एषः निद्रां कृतवान्।    एतेन निद्रा कृता।
३. भवान् काव्यं लिखितवान्।    भवता काव्यं लिखितम्।
भवान् श्लोकं लिखितवान्।    भवता श्लोकः लिखितः।
भवान् कवितां लिखितवान्।    भवता कविता लिखिता।

कृदन्तानां स्थाने यदि साक्षात् तिङन्तस्य एव प्रयोगं कुर्मः तदा तु एषः विशेषः न भवति। यतः तिङन्तं तु लिङ्गत्रयेऽपि समानमेव रूपं प्राप्नोति।

यथा -

भवता काव्यं लिखितम्।    भवता काव्यम् अलिख्यत।
भवता श्लोकः लिखितः।    भवता श्लोकः अलिख्यत।
भवता कविता लिखिता।    भवता कविता अलिख्यत।

'अलिख्यत' इति एकमेव रूपं सर्वत्रापि अस्ति। एवं कृदन्तप्रयोगे जायमानं लिङ्गपरिवर्तनं मनसि स्थापयित्वा एतेषां वाक्यानां प्रयोगपरिवर्तनं कुर्वन्तु। अनन्तरं अस्माभिः प्रयोगपरिवर्तनं कृत्वा उक्तं वाक्यमपि शृण्वन्तु।

१. अम्बा गृहकार्यं कृतवती।
[--------------------------------------------------]
*(अम्बया गृहकार्यं कृतम्।)*
२. अग्रजः वित्तकोषं गतवान्।
[--------------------------------------------------]
*(अग्रजेन वित्तकोषः गतः।)*

३. प्रजावती वेणीं रचितवती।

[--------------------------------------------]

*(प्रजावत्या वेणी रचिता।)*

४. पुत्रः पाठं पठितवान्।

[--------------------------------------------]

*(पुत्रेण पाठः पठितः।)*

५. पुत्री नृत्यं कृतवती।

[--------------------------------------------]

*(पुत्र्या नृत्यं कृतम्।)*

६. पितामहः सङ्गीतसभां गतवान्।

[--------------------------------------------]

*(पितामहेन सङ्गीतसभा गता।)*

७. पितामही पूजां कृतवती।

[--------------------------------------------]

*(पितामह्या पूजा कृता।)*

८. भगिनी पत्रं प्रेषितवती।

[--------------------------------------------]

*(भगिन्या पत्रं प्रेषितम्।)*



९. वैद्यः अस्वस्थाय औषधं दत्तवान्।

[--------------------------------------------]

*(वैद्येन अस्वस्थाय औषधं दत्तम्।)*

१०. एषः दण्डं गृहीतवान्।

[--------------------------------------------]

*(एतेन दण्डः गृहीतः।)*

कर्मणिप्रयोगे भूतकाले अस्माभिः उपयुज्यमानानि कृदन्तरूपाणि कर्मपदस्य विशेषणानि भवन्ति इति वयं ज्ञातवन्तः। विशेषणविशेष्ययोः सम्बन्धे -

यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य।
तल्लिङ्गं तद्वचनं सा च विभक्तिः विशेषणस्यापि॥

इति नियमं वयं जानीमः एव। तत्र विशेषणं विशेष्यस्य लिङ्गम् अनुसरति इत्यत्र उदाहरणानि एतावत्पर्यन्तं दृष्टानि। विशेषणं विशेष्यस्य वचनं कथम् अनुसरति इत्यस्य उदाहरणानि जानीमः।

एतानि उदाहरणानि परिशीलयन्तु -

१. मधुसूदनः पुस्तकं पठितवान्।

मधुसूदनेन पुस्तकं पठितम्।

मधुसूदनः पुस्तकानि पठितवान्।

मधुसूदनेन पुस्तकानि पठितानि।

२.  राधा दर्पणम् आनीतवती ।
राधया दर्पणः आनीतः ।
राधा दर्पणान् आनीतवती ।
राधया दर्पणाः आनीताः ।

३.  सा मालां कृतवती ।
तया माला कृता ।
सा मालाः कृतवती ।
तया मालाः कृताः ।

४.  एषः लेखनीं क्रीतवान् ।
एतेन लेखनी क्रीता ।
एषः लेखनीः क्रीतवान् ।
एतेन लेखन्यः क्रीताः ।

अत्र सर्वत्र विशेषणीभूतस्य कृदन्तरूपस्य वचनं विशेष्यस्य कर्मपदस्य वचनम् अनुसृत्य परिवर्तितम् ।

वचनपरिवर्तनस्य एतम् अंशं मनसि स्थापयित्वा एतेषां वाक्यानां प्रयोगपरिवर्तनं कुर्वन्तु । अनन्तरम् अस्माभिः प्रयोगपरिवर्तनं कृत्वा उक्तं वाक्यमपि श्रृण्वन्तु ।

१.  विवेकानन्दः विदेशान् गतवान् ।
[---------------- ---------------- -------------- ।]
*(विवेकानन्देन विदेशाः गताः ।)*



२.  नागराजः शिष्यान् पाठितवान् ।
[--------------- --------------- --------------- ।]
*(नागराजेन शिष्याः पाठिताः ।)*

३.  शारदा आपणे शाटिकाः क्रीतवती ।
[----------- ----------- ----------- ----------- ।]
*(शारदया आपणे शाटिकाः क्रीताः ।)*

४.  प्राचार्यः अध्यापकान् आहूतवान् ।
[--------------- --------------- --------------- ।]
*(प्राचार्येण अध्यापकाः आहूताः ।)*

५.  आपणिकः सञ्चिकाः दत्तवान् ।
[--------------- --------------- --------------- ।]
*(आपणिकेन सञ्चिकाः दत्ताः ।)*

६.  भवान् पत्राणि न प्रेषितवान् ।
[----------- ----------- ----------- ----------- ।]
*(भवता पत्राणि न प्रेषितानि ।)*

७.  सर्वे अपि सूचनाः श्रुतवन्तः वा ?
[--------- --------- --------- -------- -------- ?]
*(सर्वैः अपि सूचनाः श्रुताः वा ?)*

८. दशरथः कदापि पत्नीः न निन्दितवान् ।

[--------- --------- --------- --------- -------- ।]

*(दशरथेन कदापि पत्न्यः न निन्दिताः ।)*

९. एषः लेखकः दश कादम्बरीः लिखितवान् ।

[--------- --------- --------- --------- -------- ।]

*(एतेन लेखकेन दश कादम्बर्यः लिखिताः ।)*

१०. एषा आंग्लभाषां ज्ञातवती ।

[-------------- -------------- -------------- ।]

*(एतया आंग्लभाषा ज्ञाता ।)*

कृदन्तानां स्थाने तिङन्तस्य एव प्रयोगं कुर्मः चेत् तदा तिङन्तस्य वचनपरिवर्तनं भवति एव ।

यथा –

१. भवती चित्रं लिखितवती ।
भवत्या चित्रम् अलिख्यत ।
भवती चित्राणि लिखितवती ।
भवत्या चित्राणि अलिख्यन्त ।

२. सः पाठं पठितवान् ।
तेन पाठः अपठ्यत ।
सः पाठान् पठितवान् ।
तेन पाठाः अपठ्यन्त ।



अत्र क्रियापदेषु अपि वचनपरिवर्तनं सञ्जातम् अस्ति इति भवन्तः लक्षितवन्तः स्युः ।

अकर्मकधातूनां भावेप्रयोगः वर्तमानकाले कथं भवति इति वयं पूर्वमेव ज्ञातवन्तः । तथापि पुनरपि, कानिचित् उदाहरणानि स्मरामः । यथा –

१. फलेन पत्यते ।
२. शुनकेन भष्यते ।
३. प्रातःकाले सर्वैः उत्थीयते ।
४. छात्रैः आसनेषु उपविश्यते ।
५. कार्यक्रमेण भूयते ।

भावेप्रयोगे भूतकाले कृदन्तयुक्तानि वाक्यानि यथा –

१. फलेन पतितम् ।
२. सर्वैः उत्थितम् ।
३. छात्रैः उपविष्टम् ।
४. शिशुना रुदितम् ।
५. उन्मत्तेन हसितम् ।
६. नर्तक्या अभिनीतम् ।
७. दीपेन ज्वलितम् ।

वर्तमानकाले इव अत्रापि भावेप्रयोगे एकवचनस्य एव प्रयोगः । अतः –

'बालेन उत्थितम् ।' – 'बालैः उत्थितम् ।'

उभयत्रापि 'उत्थितम्' इति एकवचनस्य एव प्रयोगः ।

## विधिलिङ्लकारान्तरूपसहितानां वाक्यानां प्रयोगपरिवर्तनम् ।

एतानि वाक्यानि सावधानं परिशीलयन्तु -

१. अशोकः सर्वान् पाठान् पठेत् ।

२. सर्वे सत्यमेव वदेयुः ।

३. भवती धैर्येण भाषणं कुर्यात् ।

४. भवान् प्रतिदिनं दिनचर्यां लिखेत् ।

५. छात्राः उत्तमं सङ्गीतं शृणुयुः ।

६. अहं प्रतिदिनं योगाभ्यासं कुर्याम् ।

७. भवान् धूमपानम् अवश्यं त्यजेत् ।

८. भवत्यः वर्षाकाले छत्रं नयेयुः ।

९. भवत्यः व्यर्थं कालहरणं न कुर्युः ।

१०. शत्रूणां विषये वयं सर्वदा जागरूकाः भवेम ।

११. वयं सर्वे संस्कृतप्रचारकार्यं कुर्याम ।

अत्र 'पठेत्', 'वदेयुः', 'कुर्याम', 'भवेम' - इत्यादीनि यानि रूपाणि प्रयुक्तानि सन्ति, तानि विधिलिङ्लकारस्य रूपाणि । यद्यपि अनेकेषु अर्थेषु विधिलिङ्लकारः उपयुज्यते, अत्र तु विध्यर्थे एव तस्य उपयोगः कृतः अस्ति । कर्तरिप्रयोगे विधिलिङ्लकारस्य प्रयोगः अत्र प्रदर्शितः अस्ति ।

कर्तरिप्रयोगतः कर्मणिप्रयोगं प्रति, भावेप्रयोगं प्रति वा यदा एतादृशवाक्यानां परिवर्तनं कुर्मः तदा क्रियापदस्य स्थाने तव्यत्प्रत्ययान्तानाम्, अथवा अनीयर्-प्रत्ययान्तानां रूपाणां प्रयोगं कुर्मः ।



'गन्तव्यम्', 'द्रष्टव्यम्', 'पातव्यम्' - इत्यादीनि तव्यत्-प्रत्ययान्तानि रूपाणि ।

'पठनीयम्', 'लेखनीयम्', 'वदनीयम्' - इत्यादीनि अनीयर्-प्रत्ययान्तानि रूपाणि ।

एतेषां प्रयोगः कर्मणिप्रयोगे तथा भावेप्रयोगे एव ।

यथा - भवता कार्यं करणीयम् ।
भवत्या सङ्गीतं श्रोतव्यम् ।
मया शीघ्रम् उत्थातव्यम् ।

एतत् प्रयोगपरिवर्तनं परिशीलयन्तु -

१. सर्वे शीघ्रं गच्छेयुः ।

*सर्वैः शीघ्रं गन्तव्यम् ।*

२. परीक्षासन्दर्भे भवान् अधिकं पठेत् ।

*परीक्षासन्दर्भे भवता अधिकं पठनीयम् ।*

३. भवान् सर्वदा जागरूकः भवेत् ।

*भवता सर्वदा जागरूकेण भवितव्यम् ।*

४. कोऽपि मध्ये न उत्तिष्ठेत् ।

*केनापि मध्ये न उत्थातव्यम् ।*

५. सर्वे अत्र पश्येयुः ।

*सर्वैः अत्र द्रष्टव्यम् ।*

एतेषु वाक्येषु कर्मपदं नास्ति । अतः तव्यत्प्रत्ययान्तम् अनीयर्-प्रत्ययान्तं च रूपं नपुंसकलिङ्गे अस्ति । यथा - गन्तव्यम्, पठनीयम् - इत्यादि ।

यदि कर्मपदं भवति तर्हि तव्यत्प्रत्ययान्तम् अनीयर्-प्रत्ययान्तं च रूपं कर्मपदस्य लिङ्गं वचनं च अनुसरति ।

तस्य उदाहरणानि यथा –

१. छात्राः कोलाहलं न कुर्युः ।

*छात्रैः कोलाहलः न करणीयः ।*

२. कोऽपि धूमपानं न कुर्यात् ।

*केनापि धूमपानं न करणीयम् ।*

३. सर्वे दुरभ्यासान् त्यजेयुः ।

*सर्वैः दुरभ्यासाः त्यक्तव्याः ।*

४. धनिकाः निर्धनेभ्यः धनं दद्युः ।

*धनिकैः विर्धनेभ्यः धनं दातव्यम् ।*

५. वार्ताः ज्ञातुं वयं वृत्तपत्रिकाः पठेम ।

*वार्ताः ज्ञातुम् अस्माभिः वृत्तपत्रिकाः पठनीयाः ।*

६. बालाः दूरदर्शने उत्तमान् कार्यक्रमान् एव पश्येयुः ।

*बालैः दूरदर्शने उत्तमाः कार्यक्रमाः एव द्रष्टव्याः ।*

७. भवान् शास्त्रीयसङ्गीतं शृणुयात् ।

*भवता शास्त्रीयसङ्गीतं श्रोतव्यम् ।*

९. भवती कालिदासस्य सर्वाणि काव्यानि पठेत् ।

*भवत्या कालिदासस्य सर्वाणि काव्यानि पठनीयानि ।*



१०. अहं पञ्च घटीः क्रीणीयाम् ।

*मया पञ्च घट्यः क्रेतव्याः ।*

अकर्मकधातूनां प्रयोगे तव्यत्-प्रत्ययान्तानि, अनीयर्-प्रत्ययान्तानि च रूपाणि उपयुज्य प्रयोगपरिवर्तनं कृतम् । तत् यथा –

१. सर्वे प्रातः शीघ्रम् उत्तिष्ठेयुः ।

*सर्वैः प्रातः शीघ्रम् उत्थातव्यम् ।*

२. उपन्याससमये भवन्तः तूष्णीम् उपविशेयुः ।

*उपन्याससमये भवद्भिः तूष्णीम् उपवेष्टव्यम् ।*

३. वाहनचालनसमये चालकाः जागरूकाः भवेयुः ।

*वाहनचालनसमये चालकैः जागरूकैः भवितव्यम् ।*

४. सभामध्ये कोऽपि न हसेत् ।

*सभामध्ये केनापि न हसनीयम् ।*

अत्र तव्यत्प्रत्ययान्तम् अनीयर्-प्रत्ययान्तं च रूपं सर्वदा एकवचनान्तमेव भवति ।

**सूचना** – तव्यत्प्रत्ययान्तस्य रूपस्य अनीयर्-प्रत्ययान्तस्य रूपस्य च अर्थे कोऽपि भेदः नास्ति ।

'गन्तव्यम्', 'गमनीयम्' – इत्यनयोः अर्थः समानः एव ।

**अभ्यासः** - एतेषां वाक्यानां प्रयोगपरिवर्तनं कुर्वन्तु -

१. भवन्तः प्रतिदिनं संस्कृतसम्भाषणं कुर्युः ।
२. भवत्यः गृहपाठान् लिखेयुः ।
३. कर्मकरी पात्राणि सम्यक् प्रक्षालयेत् ।
४. आरक्षकाः चोरान् गृह्णीयुः ।
५. वयं संस्कृतसेवां कुर्याम ।
६. विज्ञानिनः संशोधनं कुर्युः ।
७. भवन्तः असमीचीनाः लेखनीः न क्रीणीयुः ।
८. वयं शत्रुभ्यः भारतदेशं रक्षेम ।
९. मया पाश्चात्यदेशाः द्रष्टव्याः ।
१०. सर्वैः प्रक्षालितानि वस्त्राणि धर्तव्यानि ।
११. परीक्षार्थं भवता कानि कानि पुस्तकानि पठनीयानि ?
१२. अद्यतनकार्यक्रमविषये मया के के सूचनीयाः ?
१३. कदा मया कथाः लेखनीयाः ?
१४. अस्माभिः श्वः कस्मिन् समये उत्थातव्यम् ?
१५. कार्यक्रमे मया कुत्र उपवेष्टव्यम् ?
१६. कस्मिन् समये पूजया भवितव्यम् ?

**प्रयोगाभ्यासं कुर्वतां भवताम् अभिनन्दनानि ।**

**- शुभं भूयात् । -**